# विषयानुक्रमणिका।

विषयानुक्रमणिका ।



इति विषयानुक्रमणिका ।

॥ श्रीः ॥

श्रीशुक्लयजुर्वेदीयमाध्यन्दिनवाजसनेयिनां

# गयाश्राद्धादिपद्धतिः ।

श्रीबीकानेरराज्यान्तर्गतश्रीरत्नगढनिवासिना
गौडवंशावतंसेन नानानिबन्धकर्त्रा कर्मका-
ण्डाचार्य-कर्मकाण्डकोविद-श्रौतभूषण-
इत्युपाधित्रयधारिणा पण्डित
श्रीचतुर्थीलालशर्मणा प्रणीता ।

सैव-
श्रीकृष्णदासात्मज-गंगाविष्णुश्रेष्ठिना,
स्वकीये "लक्ष्मीवेंकटेश्वर" मुद्रणालये
मुद्रयित्वा प्रकाशिता ।
संवत् १९८४, शके १८४९.

कल्याण-मुंबई.

श्रीशुक्लयजुर्वेदीयमाध्यन्दिनवाजसनेयिनां

# गयाश्राद्धादिपद्धतिः ।



श्रीगणेशाय नमः॥ स्वपुरः पिंडदातॄणां पितॄन् पापयुतानपि । समुद्धरन्तं कृपया नौमि देवं गदाधरम् ॥ १ ॥ वायुपुराणे–गयायात्रां प्रवक्ष्यामि शृणु नारद मुक्तिदाम्। निष्कृतिस्त्विह कर्तॄणां ब्रह्मणा गीयते पुरा ॥ २ ॥ उद्यतश्चेद्गयां गन्तुं श्राद्धं कृत्वा विधानतः । विधाय कार्पटीवेषं कृत्वा ग्रामप्रदक्षिणाम् ॥ ३ ॥ ततो ग्रामांतरं गत्वा श्राद्धशेषान्नभोजनम् । ततः प्रतिदिनं गच्छेत्प्रतिग्रहविवर्जितः ॥ ४ ॥ प्रतिग्रहादुपावृत्तः सन्तुष्टो नियतः शुचिः । अहङ्कारनिवृत्तो यः स तीर्थफलमश्नुते ॥ ५ ॥ यस्य हस्तौ च पादौ च मनश्चापि सुसंयतम् । जितेन्द्रियो दानशीलः स

तीर्थफलमश्नुते ॥ ६ ॥ गृहाच्चलितमात्रेण गयायां गमनं प्रति । स्वर्गारोहणसोपानं पितॄणां च पदे पदे ॥ ७ ॥ पदेपदेऽश्वमेधस्य यत्फलं गच्छतो गयाम् । तत्फलं लभते पुण्यं समग्रं नात्र संशयः ।८। ततो गयां समासाद्य ब्रह्मचारी समाहितः । अश्वमेधमवाप्नोति गमनादेव नारद ॥ ९ ॥ कांक्षन्ति पितरः पुत्रान्नरकाद्भयभीरवः । गयां यास्यति यः पुत्रः स नस्त्राता भविष्यति ॥ १० ॥ गयाप्राप्तं सुतं दृष्ट्वा पितॄणामुत्सवो भवेत् । पद्भ्यामपि जलं स्पृष्ट्वा सोऽस्मभ्यं किं न दास्यति ॥ ११ ॥ एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् । यजेद्वा चाश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥ १२ ॥ गयां गत्वाऽन्नदाता यः पितरस्तेन पुत्रिणः । पक्षत्रयनिवासी च पुनात्यासप्तमं कुलम् ॥ १३ ॥ नोचेत्पंचदशाहं वा सप्तरात्रं त्रिरात्रकम् । महाकल्पकृतं पापं गयां प्राप्य विनश्यति ॥ १४ ॥

ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः । पापं तत्संगजं सर्वं गयाश्राद्धाद्विनश्यति ॥ १५ ॥ आत्मजोऽप्यन्यजो वापि गयाभूमौ यदा तदा । यन्नाम्ना पातयेत्पिण्डं तं नयेद्ब्रह्म शाश्वतम् ॥ १६ ॥ गयायां सर्वकालेषु पिण्डं दद्याद्विचक्षणः । मीने मेषे स्थिते सूर्ये कन्यायां कार्मुके घटे । दुर्लभं त्रिषु लोकेषु गयायां पिण्डपातनम् ॥ १७ ॥ मकरे वर्तमाने च ग्रहणं चन्द्रसूर्ययोः। दुर्लभं त्रिषु लोकेषु गयायां पिण्डपातनम् ॥ १८ ॥ अधिमासे जन्मदिने चास्तेपि गुरुशुक्रयोः । न त्यक्तव्यं गयाश्राद्धं सिंहस्थे च बृहस्पतौ ॥ १९ ॥ सकृद्गयाभिगमनं सकृत्पिण्डप्रपातनम् । दुर्लभं किंपुनर्मन्ये अस्मिन्नेव व्यवस्थितः ॥ २० ॥ मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः । वर्जयित्वा कुरुक्षेत्रं विशालं विरजां गयाम् ॥ २१ ॥ पायसेनाथ चरुणा सक्तुना पिष्टकेन वा । तंडुलैः फल-

मूलाद्यैर्गयायां पिण्डपातनम् ॥ २२ ॥ तिल-
कल्केन खण्डेन गुडेन सघृतेन वा । केवलेनैव
दध्ना वा ऊर्षेण मधुनापि वा ॥ २३ ॥ पिण्याकं
सघृतं खण्डं पितृभ्योऽक्षयमित्युत।इष्यते पितृभि-
र्भोज्यं हविष्यान्नं मुनीरितम् ॥ २४ ॥ मुष्टिमात्र-
प्रमाणेन चार्द्रामलकमात्रकम् । शमीपत्रप्रमाणेन
पिंडं दद्याद्गयाशिरे॥उद्धरेत्सप्तगोत्राणि कुलमेको-
त्तरं शतम् ॥ २५ ॥ पिता माता च भार्या च
भगिनी दुहितुः पतिः । पितृष्वसा मातृष्वसा सप्त
गोत्रांश्च तारयेत् ॥ २६ ॥ चतुर्विंशश्च विंशश्च
षोडश द्वादशैव हि । रुद्रा दश वसुश्चैव कुलमेको-
त्तरं शतम् ॥ २७ ॥ एकतः सर्ववस्तूनि रसवन्ति
मधूनि हि । स्मृत्वा गदाधरांघ्र्यब्जं फल्गुतीर्थाम्बु
चैकतः ॥ २८ ॥ नावाहनं न दिग्बंधो न दोषो
दृष्टिसंभवः । सकारुण्येन कर्त्तव्यं तीर्थश्राद्धं
विचक्षणैः ॥ २९ ॥ पिंडासनं पिंडदानं पुनः

प्रत्यवनेजनम् । दक्षिणा चान्नसंकल्पस्तीर्थश्राद्धेष्वयं विधिः ॥ ३० ॥ अन्यत्रावाहिताः काले पितरो यांत्यमुं प्रति । अत्रागतं सुतं दृष्ट्वा स्वयमायान्ति सर्वथा ॥३१॥ तीर्थश्राद्धं प्रयच्छद्भिः पुरुषैः फलकांक्षिभिः । कामं क्रोधं तथा लोभं त्यक्त्वा कार्याः सदा क्रियाः ॥ ३२ ॥ ब्रह्मचार्येकभोजी च भूशायी सत्यवाक् शुचिः । सर्वभूतहिते रक्तः स तीर्थफलमश्नुते ॥ ३३ ॥ तीर्थान्यनुसरन् धीरः पाखण्डं पूर्वतस्त्यजेत्।पाखंडं तच्च विज्ञेयं यद्भवेत् कर्म कामतः ॥ ३४ ॥ गयायां पिंडदानेन यत्फलं लभते नरः । न तच्छक्यं मया वक्तुं कल्पकोटिशतैरपि ॥ ३५ ॥

अथ सर्वतीर्थोपयोगितीर्थस्नानतर्पणश्राद्धप्रयोगः ।

तत्रतावत्तीर्थप्राप्तिदिने पादचारेण यावद्गन्तुं शक्यते तावतः स्थानात् यानोपानहौ परित्यज्य गच्छेत् ॥ ततस्तीर्थे संप्राप्ते पाणिपादौ प्रक्षा-

ल्याचम्य ॐ अमुकतीर्थाय नमः इति साष्टाङ्गं प्रणम्य गंधपुष्पादिभिः संपूज्य देशकालौ संकीर्त्य अमुकगोत्रोऽमुकशर्मा ममेहजन्मनि जन्मान्तरे वा कृतकायिकवाचिकमानसिकसांसर्गिकदोषपरिहारार्थं श्रीपरमेश्वरप्रीत्यर्थममुकतीर्थप्राप्तिनिमित्तकं स्नानमहं करिष्ये । इतिसंकल्प्य ॥ यथाविधिना सूर्याभिमुखः स्थित्वा स्नानं कुर्यात् ॥

अथ स्नानप्रयोगः ।

आचारादर्शे—कात्यायनः । यथोक्तमृत्तिकामार्द्रगोमयं कुशान् कृष्णतिलान् सुरभीणिपुष्पाण्यादाय सुमनानद्यादिकं गत्वा तत्तीरेशुचौदेशे पृथक् पृथक् स्थापयेत् । तदनंतरं सूर्याभिमुखस्तीर्थानि प्रार्थयेत् । ओं पुष्कराद्यानि तीर्थानि गंगाद्याः सरितस्तथा । आगच्छंतु पवित्राणि स्नानकालेसदा मम ॥ १ ॥ त्वं राजा सर्वतीर्थानांत्वमेवजगतः पिता । याचितंदेहिमेतीर्थंसर्वपापैःप्रमुच्यते ॥ २ ॥ अपा-

मधिपतिस्त्वंच तीर्थेषु वसतिस्तव। वरुणायनमस्तुभ्यंस्नानानुज्ञांप्रयच्छमे। ३। गंगेचयमुनेचैवगोदावरि सरस्वति। नर्मदेसिंधोकावेरि जलेस्मिन् सान्निधिं कुरु॥ ४॥ इतिप्रार्थ्य। ततः पाणिपादं प्रक्षाल्य नाभिमात्रजलंगत्वाकुशहस्तोबद्धशिखीआचम्य देशकालौसंकीर्त्य ममकायवाङ्मनःकृतकर्मदोषपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रातः स्नानं करिष्ये इतिसंकल्प्य ॐ उरुᳮंहिराजाव्वरुणश्चकारसूर्यायपंथामन्वेतवाऽउं। अपदेपादाप्रतिधातवेकुरुतापवक्ता हृदयाव्विधश्चित्॥ नमोव्वरुणायाभिष्ठितोव्वरुणस्य पाशः॥ इति न्युब्जांजलिहस्तेन तोयमामंत्र्य। ओं येतेशतंव्वरुणयेसहस्रंयज्ञियाः पाशाविततामहांतः। तेभिर्न्नोअद्यसवितोतव्विष्णुर्विश्वेमुंचंतुमरुतः स्वर्काः। इति त्रिः प्रदक्षिणं

जलभावे तु ... । ततः ओं सुमित्रियान ऽआप ओषध-
यः संतु इति जलांजलिमादाय। ओं दुर्मित्रियास्त-
स्मै संतु यो ऽस्मान्द्वेष्टि यं च वयं द्विष्मः इति तीर्थतटे
द्वेष्यं प्रति निषिंचेत् । ततः कटिवस्त्यूरुजंघेचरणौ
प्रत्येकं मृत्तोयाभ्यां त्रिस्त्रिः प्रक्षाल्य एकं पादं जले ऽ-
परं स्थले निधायाचामेत् । ततः उदकं नमस्कृत्य
ओं इदं विष्णुर्विचक्रमे त्रेधा निदधे पदं समूढमस्य
पांसुरे स्वाहा । इति मृत्तिकयांगानि संस्पृश्य
नाभिमात्रं जलं प्रविशेत्। ओं आपो अस्मान्मातरः
शुंधयंतु घृतेन नो घृतप्वः पुनंतु विश्वं हि रिप्रं प्र-
वहंति देवीरिति मंत्रेण सूर्याभिमुखो निमज्जेत्। ततः
स्नात्वा । ओं उदिदाभ्यः शुचिरा पूत ऽएमि
इति निमज्योन्मज्ज्याऽऽचम्य ओं मा नस्तोके तने-

येमानऽआयुंषिमानो गोषु मानो अश्वेषुरीरिषः मानो व्वीरान्रुद्रभामिनोवधीर्हविष्मंतः सदामित्वा-हवामहे इतिमंत्रेणगोमयेनांगानिविलिंपयेत् । ततो मार्ज्जनं ओं इमम्मेंव्वरुणश्रुधीहवमद्याचमृडयत्वा-मवस्युराचके ।१। ओं तत्त्वांयामिब्रह्मणावंदमान-स्तदाशास्तेयजमानोहविर्भिः अहेडमानोव्वरुणे-हबोद्ध्युरुशंᳩसमानऽआयुः प्रमोषीः ।२। ओं त्व-न्नोऽअग्नेव्वरुणस्यविद्वान्देवस्यहेडोऽअवयासिसी-ष्ठाः यजिष्ठोवह्नितमः शोशुचानोविश्वाद्वेषांᳩसि प्रमुमुग्ध्यस्मत् ।३। ओं सत्वन्नोऽअग्नेवमोभवोतीने-दिष्ठोऽअस्याउषसोव्युष्टौ अवयक्ष्वनोवरुणᳩर-राणोवीहिमृडीकᳩसुहवोनऽएधि ।४। ओंमापोमो-षधीर्हिंᳩसीद्धाम्नोधाम्नोराजंस्ततोव्वरुणनोमुंचय

दाहुरश्याइतिवरुणेतिशपामहेततोवरुणनोमुंच ५
ओं उदुत्तमंव्वरुणपाशमस्मदवाधमंवि॰ध्यम९७
श्रंथाय अथावयमादित्यव्रतेतवानागसोऽअदितये
स्याम६ओंमुंचंतुमाशपथ्यादथोव्वरुण्यादुतअथो-
ग्रुमस्यपड्वीशात्सर्वस्माद्देवकिल्बिषात्।७।ॐ अव
भृथनिचुंपुणनिचेरुरसिनिचुंपुणःअवदेवैर्देवकृतमे-
नो यासिषमवमर्त्यैर्मर्त्यकृतंपुरुराव्णोदेवरिषस्यां-
हि८ इत्यष्टभिर्मंत्रैर्हस्तेन प्रत्येकं शिरसि जलं प्रक्षि-
पेत्। ततो वहज्जलप्रवाहाभिमुखः स्थिरे सूर्याभि-
मुखो मौनी मज्जेत्। ततआचम्यवक्ष्यमाणैरोंकारा-
दिभिर्मंत्रैः प्रतिमंत्रं कुशत्रयेण जलेन प्रदक्षिणमा-
त्मानं पावयेत् । ओं पुनातु १ ओं भूः पुनातु २
ओं भुवः पुनातु ३ ओं स्वः पुनातु ४ ओं महः
पुनातु ५ ओं जनः पुनातु ६ ओं तपः पुनातु ७

ओं सत्यं पुनातु ८ ओं तत्सवितुरीतिसर्वं पुनातु ९
ओं आपोहिष्ठा मयोभुवस्तानऽऊर्ज्जेदधातन महेर-
णायचक्षसे॥ ६॥ योवःशिवतमोरसस्तस्यभाजयते-
हनः उशतीरिवमातरः ।७। तस्माअरङ्गमामवो-
यस्यक्षयायजिन्वथ आपोजनयथाचनः ॥८॥ओं
इदमापःप्रवहतावद्यञ्च मलंचयत।यच्चाभिदुद्रोहा-
नृतंयच्चशेपेऽअभीरुणंआपोमातस्मादेनसःपवमा-
नश्चमुंचतु ॥ ९ ॥ ओं हविष्मतीरिमाऽआपोह
विष्मा २ँ ॥ आविवासतिहविष्मान्देवोऽअध्वरोह-
विष्मां २ँ अस्तुसूर्यः ॥१०॥ओं देवीरापोऽअ-
पान्नपाद्योवऊर्म्मिर्हविष्यऽइन्द्रियावान्मदिन्तमः तं
देवेभ्योदेवत्रादत्तशुक्रपेभ्योयेषांभागस्थस्वाहा ११
ओं कार्षिरसिसमुद्रस्य त्वाक्षित्याऽउन्नयामिसमा-

पोऽअद्भिरंगमतसमोषधीभिरोषधीः ॥ १२ ॥ ओं
अपोदेवामधुमतीरगृभ्णन्नूर्जस्वतीराजस्वाश्चितांना
याभिर्मित्रावरुणावभ्यषिंचन्याभिरिन्द्रमनयन्नत्य-
रातीः ।१३।ओं द्रुपदादिवमुमुचानःस्विन्नःस्नातो
मलादिवपूतंपवित्रेणेवाज्यमापःशुंधन्तु मैनसः १४
ओं शन्नोदेवीरभिष्टयऽआपोभवन्तुपीतये शंय्यो-
रभिस्रवंतुनः॥ १५॥ ओं अपाᳪरसमुद्वयसᳪ
सूर्येसन्तᳪ समाहितं आपᳪरसस्य योर-
सस्तम्वोगृह्णाम्युत्तममुपयामगृहीतोसीन्द्रायत्वाजु-
ष्टङ्गृह्णाम्येषतेयोनिरिंद्रायत्वाजुष्टतमम् ॥ १६ ॥
ओं अपोदेवीरुपसृजमधुमतीरयक्ष्मायप्रजाभ्यः
तासामास्थानादुज्जिहतामोषधयःसुपिप्पलाः १७
पुनन्तुमापितरःसोम्यासःपुनन्तुमा पितामहाः

पुनन्तु प्रपितामहाः पवित्रेणशतायुषा॥१८॥ओं पुनंतु मापितामहाः पुनंतुप्रपितामहाः पवित्रेण शतायुषाव्विश्वमायुर्व्यश्नवै ॥१९॥ ओं अग्नआयूᳪंषिपवसऽआसुवोर्ज्जमिषंचनःआरेबाधस्वदुच्छुनाम्॥२०॥ओं पुनन्तुमादेवजनाःपुनन्तुमनसाधियः पुनन्तुव्विश्वाभूतानिजातवेदःपुनीहिमा २१ ओं पवित्रेणपुनीहिमा शुक्रेणदेवदीद्यत् अग्नेक्रत्वा क्रतू २ रनु ॥२२॥ ओंयत्तेपवित्रमर्च्चिष्यग्नेविततमंतरा ब्रह्मतेनपुनातुमा॥२३॥ॐ पवमानःसोऽअद्यनः पवित्रेणव्विचर्षणिःयःपोतासपुनातुमा २४ ओं उभाभ्यांदेवसवितःपवित्रेणसवेनंच मांपुनीहिविश्वतः २५ ओं वैश्वदेवीपुनतीदेव्यागाद्यस्यामिमाबह्व्यस्तन्वोवीतपृष्ठाःतयामदंतः सध-

मादेषुव्वय७स्यामपतयोरयीणाम् २६ ओंचित्प तिर्मापुनातुवाक्पतिर्मापुनातुदेवोमासवितापुनात्व [illegible] वित्रेणसूर्य्यस्यरश्मिभिः तस्यंतेपवित्रपतेपवित्रपूतस्ययत्कामःपुनेतच्छकेयम् ॥२७॥ एवं मार्ज्जनंकृत्वा । ओं अपाघमपकिल्विषमपकृत्यामपोरपः अपामार्गवमस्मदपदुःष्वप्न्यंठं सुव । इतिमंत्रेणापामार्गैस्त्रिभिर्मार्जयेत् । ततः ओं काण्डात्काण्डात्प्ररोहंतीपरुषः परुषस्पारि एवानोदूर्व्वेप्रतनुसहस्रेणशतेनच । इति मंत्रेण दूर्वाभिस्त्रिभिर्मार्जयेत् । ततः पूर्ववत् ओं इमं मेव्वरुण इत्यादिमंत्रैःशिरसिजलं निक्षिपेत् ततऋष्यादिकंस्मृत्वा अंतर्जलेमग्नोघमर्षणंद्रुपदांच आयंगौरितिवाऋचंत्रिरावर्त्तयेत् ।ओं ऋतंचसत्यंचाभीद्धात्तपसोऽध्यजायत । ततोरात्रिरजायतततः समुद्रो

अर्णवः समुद्रादर्णवादधिसंवत्सरो अजायत अहो-
रात्राणिविदधद्विश्वस्यमिषतोवशीसूर्याचंद्रमसौधा-
तायथापूर्वमकल्पयत् । दिवंचपृथिवींचान्तारिक्षम-
थोस्वः।साशिरसंप्राणायामं वा त्रिःकुर्यात्।यद्वा पर-
मात्मानं विष्णुं शेषशायिनंसायुधं सश्रीकं ध्यायेत्।

अथ तीर्थप्रार्थना ।

ओं विष्णोःपादप्रसूतासिवैष्णवीविष्णुपूजिता ।
पाहिनस्त्वेनसस्तस्मादाजन्ममरणांतकात् १ तिस्रः
कोट्योर्धकोटीच तीर्थानांवायुरब्रवीत्।दिविभुव्यंत-
रिक्षेचतानितेसंति जाह्नवि॥२॥नंदिनीत्येवतेनाम
देवेषुनलिनीतिच।वृंदापृथ्वीचशुभगाविश्वकायाशि
वासिता ३॥ विद्याधरीसुप्रसन्नातथालोकप्रसाधनी
क्षम्याचजाह्नवीचैवशांताशांतिप्रदायिनी॥४ एता-
निपुण्यनामानिस्नानकालेप्रकीर्तयेत् भवेत्सांनिहि-
तातस्यगंगात्रिपथगामिनी ५॥नमामि गंगे तवपा-
दपंकजंसुरासुरैर्वंदितदिव्यरूपं।भुक्तिं चमुक्तिंचददा-
सिनित्यं भावानुसारेण सदा नराणाम्॥६ यागति-

योगयुक्तानांमुनीनामूर्ध्वरेतसाम् । सागतिःसर्वजंतूनां जाह्नवीतीरवासीनाम् । ७ । इति पठित्वा नाभिमात्रजलंगतः सन् स्नानांगतर्पणं कुर्यात् ॥

अथ तर्पणप्रयोगः ।

ॐ मोदस्तृप्यतां १ ॐ प्रमोदस्तृप्यतां २ ॐ सुमुखस्तृप्यतां ३ ॐ दुर्मुखस्तृप्यतां ४ ॐ अविघ्नस्तृ० ५ ॐ विघ्नकर्ता तृप्यतां ६ ॐ ब्रह्मादयो देवास्तृप्यंतां ७ ॐ गौतमादयो ऋषयस्तृप्यंतां ८ इतिदेवतीर्थेन एकैकमंजलिं जले प्राङ्मुखः क्षिपेत् । अथोदङ्मुखः निवीत्यूर्ध्वजुषः प्राजापत्येन तीर्थेन सनकादींस्तर्पयेत् । ॐ सनकादयोमनुष्यास्तृप्यंतां २ ततोपसव्यं दक्षिणाभिमुखः पितृतीर्थेन कृष्णतिलोदकैः कव्यवाडनलादींस्तर्पयेत् ॐ कव्यवाडनलादयो देवपितरस्तृप्यंतां ३ (इति त्रयोंजलयः) ॐअस्मत्पितृपितामहप्रपितामहास्तृप्यंतां ३ ॐ अस्म-

न्मातामह-प्रमातामह-वृद्धप्रमातामहास्तृप्यन्तां ३ ॐआब्रह्मस्तम्बपर्यंतंजगत्तृप्यताम्। एवं स्नानांग-तर्पणं कृत्वायक्ष्मणे जलंदद्यात्। ॐयन्मयादूषितं तोयं मलैः शारीरसम्भवैः। तस्यपापस्य शुद्ध्यर्थंयस्मै तत्तोतिलोदकम्। १। ततस्तीरमागत्य। ॐ अग्निदग्धाश्चयेजीवायेप्यदग्धाःकुलेमम। भूमौ दत्तेनतृप्यन्तुतृप्तायांतुपरांगतिम् १इतिनिक्षिपेत्॥

इति स्नानप्रयोगः॥

## अथ कातीयतर्पणप्रयोगः।

ततः स्नानानन्तरं धौतवाससीपरिधाय। चंदन-भस्मादिना तिलकंकृत्वा। संध्यांब्रह्मयज्ञंचविधा-यतत्रस्थोदर्भवत्यां भूमौस्वशाखोक्तं देवर्षिपितृत-र्पणंकुर्यात्॥ तत्र कातीयतर्पणप्रयोगः॥ तत्रादौ कुशत्रयतिलजलान्यादाय देशकालौ संकीर्त्य अद्य समस्तपितॄणां विष्णुलोकादिप्राप्तये आत्म-नश्च मुक्तिप्राप्तये अमुकतीर्थप्राप्तिनिमित्तं नित्यं

च देवऋषिपितृतर्पणं तंत्रेणाहं करिष्ये इति संक-
ल्प्य । उपवीती प्राङ्मुख उदङ्मुखो वा दैवतीर्थेन
यवोदकेन ब्रह्मादींस्तर्पयेत् ॥ यथा ॐ ब्रह्मातृ-
प्यताम् १ ॐ विष्णुस्तृप्यताम् १ ॐ रुद्रस्तृप्य-
ताम् १ ॐ प्रजापतिस्तृप्यताम् १ ॐ देवास्तृप्य-
न्ताम् १ ॐ छंदांसितृप्यंताम् १ ॐ वेदास्तृप्य-
न्ताम् १ ॐ ऋषयस्तृप्यंताम् १ ॐ पुराणाचार्या
स्तृप्यंताम् १ ॐ गंधर्वास्तृप्यंताम् १ ॐ इतरा-
चार्यास्तृप्यंताम् १ ॐ संवत्सरः सावयवस्तृप्य-
ताम् १ ॐ देव्यस्तृप्यंताम् १ ॐ अप्सरसस्तृ-
प्यंताम् १ ॐ देवानुगास्तृप्यंताम् १ ॐ नागा-
स्तृप्यंताम् १ ॐ सागरास्तृप्यंताम् १ ॐ पर्वता-
स्तृप्यंताम् १ ॐ सरितस्तृप्यंताम् १ ॐ मनुष्या-
स्तृप्यंताम् १ ॐ यक्षास्तृप्यंताम् १ ॐ रक्षांसि
तृप्यंताम् १ ॐ पिशाचास्तृप्यंताम् १ ॐ सुप-
र्णास्तृप्यंताम् १ ॐ भूतानितृप्यंताम् १ ॐ पशु-

वस्तृप्यंताम् १ ॐ नस्पतयस्तृप्यंताम् १ ॐ ओषधयस्तृप्यंताम् १ ॐ भूतग्रामश्चतुर्विधस्तृप्यताम् १ । एवमेव ॐ मरीचिस्तृप्यताम् १ ॐ अत्रिस्तृप्यताम् १ ॐ अंगिरास्तृप्यताम् १ ॐ पुलस्त्यस्तृप्यताम् १ ॐ पुलहस्तृप्यताम् १ ॐ क्रतुस्तृप्यताम् १ ॐ प्रचेतास्तृप्यताम् १ ॐ वसिष्ठस्तृप्यताम् १ ॐ भृगुस्तृप्यताम् १ ॐ नारदस्तृप्यताम् १ । ततो निवीती उदङ्मुखउत्तराग्रेणकुशेनप्रजापतितीर्थेनयवोदकेनचसनकादीन् प्रत्येकंद्विवारम्- ॐ सनकस्तृप्यताम् २ ॐ सनंदनस्तृ० २ ॐ सनातनस्तृप्यताम् २ ॐ कपिलस्तृप्यताम् २ ॐ आसुरिस्तृ० २ वोढुस्तृ० २ ॐ पंचशिखस्तृप्यताम् २ । ततः प्राचीनावीती दक्षिणामुखः पितृतीर्थेनाद्विगुणभुग्नकुशत्रयेणातिलचंदनोदकेनकव्यवाडादीन् प्रत्येकंत्रिः ॐ कव्यवाड्स्तृप्यतामिदंतिलोदकंतस्मैस्वधानमः ३ ॐ अन-

लस्तृप्यतामिदंतिलोदकं तस्मै स्वधानमः ३ ॐ सोमस्तृप्यतामिदं० ३ ॐ यमस्तृप्यतामिदं० ३ ॐ अर्यमातृप्यतामिदं० ३ ॐ अग्निष्वात्तास्तृप्यंतामिदंतिलोदकंतेभ्यः स्वधानमः ३ ॐ सोमपास्तृप्यंतामिदं तिलोदकंतेभ्यः स्वधानमः ३ ॐ बर्हिषदस्तृप्यंतामिदंतिलोदकंतेभ्यः स्वधानमः ३ ततः ॐ यमायनमः ३ ॐ धर्मराजायनमः ३ ॐ मृत्यवेनमः ३ ॐ अंतकायनमः ३ ॐ वैवस्वतायनमः ३ ॐ कालायनमः ३ ॐ सर्वभूतक्षयाय नमः ३ ॐ उदुंबरायनमः ३ ॐ दध्नायनमः ३ ॐ परमेष्ठिनेनमः ३ ॐ वृकोदरायनमः ३ ॐ चित्रायनमः ३ ॐ चित्रगुप्तायनमः ३ इतिचतुर्दशयमांस्तर्पयेत् ॥ ततः ॐ उदीरंतामवरऽउत्परासऽउन्मध्यमाः पितरः सोम्यासः ॥ असुंयऽईयुरवृकाऽऋतज्ञास्तेनोऽवन्तु पितरो हवेषु ॥ ॐ

अमुकगोत्रोस्मत्पिताऽमुकशर्मा वसुरूपस्तृप्यता-
मिदं तिलोदकं तस्मै स्वधानमः इतिमंत्रेणवाक्येन
चप्रथमाञ्जलिं पित्रेदद्यात् १ ॐ अङ्गिरसोनःपित-
रोनवग्वाऽअथर्वाणोभृगवः सोम्यासः ॥ तेषां
व्वयꣳसुमतौयज्ञियानामपिभद्रेसौमनसेस्याम ॥
इति मंत्रेण वाक्येन च द्वितीयांजलिम्० २ ॐ
आयंतुनः पितरः सोम्यासोग्निष्वात्ताः पथि-
भिर्देवयानैः ॥ अस्मिन् यज्ञेस्वधयामदंतोधि-
ब्रुवन्तुतेवन्त्वस्मान् ॥ इतिमंत्रेण वाक्येन चतृती-
यांजलिंपित्रेदद्यात् ३। ॐऊर्ज्जंवहंतीरमृतंघृतंपयः
कीलालंपरिस्रुतम् ॥ स्वधास्त्थतर्पयतमेपितॄन्
ॐ अमुकगोत्रोऽस्मत्पितामहोऽमुकशर्मा रुद्ररूप-
स्तृप्यतामिदंतिलोदकंतस्मै स्वधा नमः ॥ इति
मंत्रेणवाक्येनचपितामहाय प्रथमांजलिंदद्यात् १ॐ

पितृभ्यः स्वधायिभ्यः स्वधानमः पितामहेभ्यः स्वधायिभ्यः स्वधानमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधानमः ॥ अक्षन् पितरोमीमदन्त पितरोतीतृपन्त पितरः पितरः शुंधध्वम् । इति पितामहाय द्वितीयांजलिं दद्यात् २। येचेह पितरो येचनेह याँश्चं विद्मयाँ ऽउंचन प्रविद्म ॥ त्वंवेत्थयातितेजातवेदः स्वधाभिर्यज्ञ सुकृतंजुषस्व । इतिपितामहायतृतीयांजलिंदद्यात् ३। ॐमधुवाताऽऋतायते मधुक्षरंतिसिंधवः माध्वीर्नः संत्वोषधीः ॥ ॐअमुकगोत्रोऽस्मत्प्रपितामहोऽमुकशर्मा आदित्यरूपस्तृप्यतामिदंतिलोदकंतस्मैस्वधानमः ॥ इतिमंत्रेण वाक्येनचप्रपितामहायप्रथमांजलिंदद्यात् १।ॐ मधुनक्तमुतोषसो मधुमत्पार्थिवं रजः मधुद्यौरस्तु नः

पिता ॥ इति प्रपितामहाय द्वितीयांजलिं० ॥२॥ ॐ
मधुमान्नोवनस्पतिर्मधुमाँऽअस्तुसूर्य्यः माध्वीर्गा-
वोभवंतुनः ॥ इतिप्रपितामहायतृतीयांजलिंद-
द्यात् ३ ॐ तृप्यध्वं तृप्यध्वं तृप्यध्वमिति पित्रा-
दिभ्योऽञ्जलित्रयं दद्यात् ॥ ततः ॐ अमुकगोत्रा-
स्मन्मातामुकदेवीगंगारूपातृप्यतामिदंजलं सति-
लंतस्यैस्वधानमः इतिमातरं० १ ॐ अमुकगोत्रा-
स्मत्पितामही अमुकदेवीयमुनारूपातृप्यतामिदं
जलं सतिलं तस्यैस्वधानमः इतिपितामहीं० १ ॐ
अमुकगोत्राऽस्मत्प्रपितामही अमुकदेवीसरस्वती-
रूपातृप्यतामिदंजलंसतिलंतस्यैस्वधानमः १ इति
प्रपितामहींचतर्पयेत् ॥ एवंसापत्नमातरम् ॥
ततः ॐनमोवःपितरोरसाय नमोवःपितरःशो-
षाय नमोवःपितरोजीवायनमोवःपितरःस्वधायै
नमोवःपितरो घोराय नमोवः पितरोमन्यवे

नमोवःपितरःपितरो नमोवोगृहान्नः पितरोदत्तस तोवः पितरोदेष्मैतद्वः पितरोवासः ॥ ॐ अमुकगोत्रोऽस्मन्मातामहोऽमुकशर्मावसुरूपस्तृप्यतामिदं जलं सतिलं तस्मै स्वधानमः ॥ इति मातामहायांजलित्रयंदद्यात् ३ ॐअमुकगोत्रोऽस्मत्प्रमातामहोऽमुकशर्मारुद्ररूपस्तृप्यतामिदंजलंसतिलंतस्मै स्वधानमः ॥ इतिप्रमातामहायांजलित्रयंदद्यात्३ ॐ अमुकगोत्रोऽस्मद्वृद्धप्रमातामहोऽमुकशर्मा आदित्यरूपस्तृप्यतामिदंजलंसतिलं तस्मै स्वधा नमः॥इतिवृद्धप्रमातामहायांजलित्रयं दद्यात्३ ॐ तृप्यध्वमित्यंजलित्रयंमातामहादिभ्योपि दद्यात् ॥ ततः ॐ अमुकगोत्राऽस्मन्मातामही अमुकदेवी गंगारूपा तृप्यतामिदंजलंसतिलंतस्यैस्वधानमः १ इति मातामह्यै० ॐ अमुकगोत्राऽस्मत्प्रमातामही अमुकदेवीयमुनारूपातृप्यतामिदंजलंसातिलं तस्यै

स्वधानमः १ इति प्रमातामह्यै० ॥ ॐ अमुकगो-
त्राऽस्मद्वृद्धप्रमातामहीअमुकदेवी सरस्वतीरूपातृ-
प्यतामिदंजलं सतिलंतस्यै स्वधानमः १ इतिवृद्ध-
प्रमातामह्यै च दद्यात्॥ ॐ अमुकगोत्राऽस्मत्पत्नी
अमुकदेवीलक्ष्मीरूपा तृप्यतामिदं जलं सतिलं
तस्यै स्वधानमःइति १ स्वपत्नीं तर्पयेत् ॥ ॐ
अमुकगोत्रोऽस्मात्पितृव्योऽमुकशर्मावसुरूपः सप-
त्नीकस्तृप्यतामिदंजलं सतिलंतस्मै स्वधानमः ३
ॐ अमुकगोत्रोऽस्मद्भ्राता अमुकशर्मा वसुरूपः
सपत्नीकस्तृप्यतामिदंजलंसतिलंतस्मैस्वधानमः३
ॐ अमुकगोत्राऽस्मात्पितृष्वसाऽमुकदेवीसभर्तृका
तृप्यतामिदंजलं सतिलं तस्यैस्वधा० १ अमुकगो-
त्रोऽस्मन्मातुलोऽमुकशर्मावसुरूपः सपत्नीकस्तृ-
प्यतामिदंजलं सतिलंतस्मै स्वधा० ३ ॐ
अमुकगोत्राऽस्मन्मातृष्वसाऽमुकदेवी सभर्तृका
तृप्यतामिदंजलं सतिलंतस्यैस्वधा० १ ॐ अमु-

कगोत्रोऽस्मच्छ्वशुरोऽमुकशर्मा वसुरूपस्तृप्यता
मिदंजलं सतिलं तस्मैस्वधा० ३ ॐ अमुकगो-
त्राऽस्मच्छ्वश्रूरमुकदेवी गंगारूपा तृप्यतामिदं जलं
सतिलं तस्यै स्वधा० १ ॐ अमुकगो-
त्रोऽस्मदाचार्योऽमुकशर्मा वसुरूपः सपत्नी-
कस्तृप्यतामिदंजलं सतिलंतस्मैस्वधा० ३ ॐ
अमुकगोत्रोऽस्मदाचार्यपुत्रोऽमुकशर्मा सपत्नीक-
स्तृप्यतामिदं जलं सतिलं तस्मै स्वधा० ३ ॐ
अमुकगोत्राऽस्मत्पुत्री अमुकदेवीतृप्यतामिदं जलं
सतिलं तस्यै स्वधा० १ ॐ अमुकगोत्राऽस्मद्भ-
गिनी अमुकदेवी यमुनारूपा तृप्यतामिदं जलं
सतिलं तस्यै स्वधा० १ ॐ अमुकगोत्रोऽस्मदुपा-
ध्यायोऽमुकशर्मा वसुरूपः सपत्नीकस्तृप्यतामिदं
जलं सतिलंतस्मैस्वधानमः ॥३ ॥ इत्युपाध्यायंच
तर्पयेत्॥ एवं पितृव्यपुत्रं० भ्रातृपुत्रं० मातुलपुत्रं०
श्यालकं० गुरुपुत्रं० जामातरं० पौत्रं० भागिनेयं०

दौहित्रं० शिष्यं० मित्रं तत्पत्नीपुत्रादींश्च मृतानपि तर्पयेत् ॥ ततः विष्णुपुराणोक्तं काम्यतर्पणं ( सव्येन ) कार्यम्॥ॐ देवासुरास्तथा यक्षा नागा गंधर्वराक्षसाः ॥ पिशाचा गुह्यकाः सिद्धाः कूष्मांडास्तरवः खगाः ॥ १ ॥ जलेचरा भूनिलया वाय्वाधाराश्च जंतवः ॥ प्रीतिमेते प्रयान्त्वाशु मद्दत्तेनाम्बुनाखिलाः ॥ २ ॥ नरकेषु समस्तेषु यातनासु च ये स्थिताः ॥ तेषामाप्यायनायैतद्दीयते सलिलं मया ॥ ३ ॥ येऽबांधवा बांधवा ये येऽन्यजन्मनि बांधवाः ॥ ते तृप्तिमखिला यांतु यश्चास्मत्तोऽभिवाञ्छति ॥ ४ ॥ ये मे कुले लुप्तपिंडाः पुत्रदारविवर्जिताः ॥ तेषां हि दत्तमक्षय्यमिदमस्तु तिलोदकम् ॥ ५ ॥ आब्रह्मस्तंबपर्यंतं देवर्षिपितृमानवाः ॥ तृप्यन्तु पितरः सर्वे मातृमातामहादयः ॥ ६ ॥ अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम् ॥ आब्रह्मभुवनाल्लोकादिदमस्तुतिलोद-

कम्॥ ७॥ एतैर्मंत्रैःपृथक्पृथक्सतिलजलं दद्यात्॥ ततोऽपसव्यं कृत्वा॥ येकेचास्मत्कुलेजाता अपुत्रागोत्रिणोमृताः॥ ते गृह्णंतु मयादत्तं वस्त्रनिष्पीडनोदकम्॥ इतिस्नानवस्त्रं बहिःस्थलेनिष्पीड्य सव्येनाऽऽचम्यतर्पणोत्तरकर्मकुर्यात्॥ तद्यथा ॐ नमोविवस्वतेब्रह्मन्भास्वतेविष्णुतेजसे॥ जगत्सवित्रे शुचयेनमस्तेकर्मदायिने॥ १॥ इतिमंत्रेण सूर्यायार्घ्यंदत्त्वा ब्रह्मादीन्पुष्पांजलिभिरर्चयेत्॥ ॐ ब्रह्म जज्ञानं प्रथमम्पुरस्ताद्विसीमतःसुरुचो वेनऽआवः सबुध्न्याऽउपमाअस्यविष्ठाः सतश्च योनिमसतश्चविवः ॐ ब्रह्मणेनमः॥ १॥ ॐ इदं विष्णुर्विचक्रमे त्रेधानिदधेपदम् समूढमस्यपा꣡ꣳ सुरे ॐ विष्णवेनमः॥ २॥ ॐ नमस्ते रुद्र मन्यवऽउतोतऽइषवेनमः। बाहुभ्यामुततेनमः ॐ रुद्राय नमः॥ ३॥ ॐ आकृष्णेन रजसावर्तमानोनि-

वेशयन्नमृतंमर्त्यंच हिरण्ययेनसवितारथेनादेवोया-
तिभुवनानिपश्यन् ॐ सूर्यायनमः ॥ ४ ॥ ॐ
मित्रस्यचर्षणीधृतोवो देवस्यसानासिद्युम्नश्चित्रश्र-
वस्तमम् ॐ मित्राय० ॥ ५ ॥ ॐ इमम्मे वरुण-
श्रुधीहवमद्याचमृडय त्वामवस्युराचके ॐ वरुणा-
यनमः ॥ ६ ॥ ततउत्थाय ॐ अदृश्रमस्यकेतवो-
विरश्मयोजना २ ऽअनु ॥ भ्राजन्तोऽअग्न-
योयथा उपयामगृहीतोसिसूर्यायत्वा भ्राजायै-
षतेयोनिः सूर्यायत्वाभ्राजाय सूर्य्यभ्राजिष्ठ भ्राजि
ष्ठस्त्वं देवेष्वसिभ्राजिष्ठोहम्मनुष्येषुभूयासम्॥१॥ ॐ
हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोतावेदिषदतिथिर्दु
रोणसत् नृषद्वरसदृतसद्व्योमसदब्जागोजाऽऋतजा
ऽअद्रिजाऽऋतम्बृहत् २ इतिसूर्यमुपस्थाय ॐ
आदित्यायनमः ॐ दिग्भ्योनमः ॐ दिग्देवता-

भ्योनमः ॐ ब्रह्मणे० ॐ पृथिव्यै० ॐ ओषधिभ्योनमः ॐ वाचेनमः ॐ वाचस्पतये० मरुद्भ्यो० अद्भ्योन० इतिनमस्कृत्योदकंचदत्त्वा॥ संवर्चसापयंसासंतनूभिरगंन्महिमनंसासꣳशिवेनं त्वष्टासुदत्रोविदंधातुरायोनुंमाष्टुतन्वोयद्विलिष्टम् १देवांगातुविदोगातुंवित्वागातुमित।मनंसस्पत इमंदेवयज्ञꣳ स्वाहावातेधाः २ इतिजपेत् ॥ इतितर्पणप्रयोगः ॥

एवंतर्पणं विधाय श्रीमहाविष्णुं षोडशोपचारैः संपूज्य माध्याह्निकं कर्मसमाप्य तीर्थप्राप्तिनिमित्तकं पित्रादीनांनवदैवतं द्वादशदैवतंवापार्वणं पितृव्यादीनां चैकोद्दिष्टं पिंडमात्रं वा अन्नेन आमान्नेनहेम्नावाब्राह्मणेषु दर्भवटुषु वा यथासंभवं कुर्यात् ॥ तत्रब्राह्मणपरीक्षानकार्या ॥ तत्रत्या विप्रदेवमातृका नावमंतव्याः ॥ श्राद्धंचपित्रादिषड्दैवत्यंनवदैवत्यं वा द्वादशदैवत्यं यथासंभवंकुलाचारानुसारेणपूर्वोक्तपार्वणविधिनाकर्त्तव्यम् ॥

परंतुएतद्वर्ज्यम् ॥ अर्घ्यदानम् आवाहनं द्विजाङ्गुष्ठनिवेशनं तृप्तिप्रश्नं विकिरं दिग्बंधनं दृष्टिदोषकृताऽपवित्रताशोधनार्थंकूष्मांडादिसूक्तजपं विसर्जनं च न कुर्यात् ॥ अत्रकुतपादिकालावश्यकताऽपि न इति ॥

अथ तीर्थनिमित्तद्वादशदैवत्यश्राद्धप्रयोगः ।

तत्र तावत्कर्त्ता स्वासने प्राङ्मुख उपविश्य दर्भपवित्रादिधारणं कृत्वासव्येनाचम्य प्राणानायम्य ॥ ॐ अपवित्रः पवित्रोवा इति ॐ पुंडरीकाक्षः पुनात्वितिपठित्वा कुशत्रयानीतजलेन श्राद्धद्रव्याणि स्वात्मानं चसिंचेत् ॥ ततः ॐ भूम्यैनमः ॐ भगवत्यै गयायै नमः ॐ भगवतेगदाधरायनमःॐ अमुकतीर्थायनमःॐ तीर्थदेवताभ्यो नमः ॥ इति नत्वा ॥ कुशत्रयतिलजलान्यादाय देशकालौ संकीर्त्य ॐ अमुकगोत्रोऽमुकशर्मा ममसमस्तपितॄणां विष्णुलोकप्राप्तये अमुकतीर्थ-

प्राप्तिनिमित्तममुकगोत्राणामस्मत्पितृपितामह-
प्रपितामहानाममुकामुकशर्मणां वसुरुद्रादित्यरू-
पाणाम् अमुकगोत्राणामस्मन्मातृपितामहीप्रपि-
तामहीनाममुकामुकदेवीनां गंगायमुनासरस्वती-
रूपिणीनां तथा अमुकगोत्राणामस्मन्मातामहप्र-
मातामहवृद्धप्रमातामहानाममुकामुकशर्मणां सप-
त्नीकानां वसुरुद्रादित्यरूपाणांतथाचअस्मन्माता-
मही-प्रमातामही-वृद्धप्रमातामहीनाममुकामुकदे-
वीनां सदैवंपार्वणश्राद्धं पितृतृप्तिकामोऽहंकरिष्ये
इतिसंकल्प्य॥ ॐ कुरुष्वइत्यनुज्ञातोगायत्रींत्रिर्ज-
पित्वा ॥ ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य
एवच ॥ नमःस्वाहायैस्वधायै नित्यमेवनमोनमः॥
इतित्रिःपठेत् ॥ ततउदङ्मुखो दक्षिणं जान्वाच्य
सव्येनजलयवसमन्वितमृजुकुशत्रयमादाय ॥ ॐ
अद्यास्मत्पित्रादित्रयमात्रादित्रय-मातामहादित्रय-
मातामह्यादिश्राद्धसंबंधिनां विश्वेषांदेवानामिद-

मासनमस्तु इतिजलयवसहितं कुशत्रयरूपमासनं पूर्वाग्रमुत्सृजेत् ॥ १ ॥ ततोदक्षिणामुखःप्राचीनावीती पातितवामजानुः द्विगुणभुग्नकुशत्रयतिलजलान्यादाय ॐअमुकगोत्रास्मत्पितृपितामहप्रपितामहाअमुकामुकशर्माणोवसुरुद्रादित्यरूपाः इदमासनं युष्मभ्यंस्वधा इत्युच्चार्यपितृतीर्थेनमोटकरूपंदक्षिणाग्रमुत्सृजेत् ॥ १ ॥ ततः ॐ अमुकगोत्रास्मन्मातृपितामहीप्रपितामह्यः अमुकामुकदेव्योगंगायमुनासरस्वतीरूपिण्यः इदमासनं युष्मभ्यं स्वधा इतिमोटकरूपमासनं दद्यात् ॥ २ ॥ पुनः ॐ अमुकगोत्राऽस्मन्मातामहप्रमातामहवृद्धप्रमातामहाअमुकामुकशर्माणः सपत्नीकाः वसुरुद्रादित्यरूपाः इदमासनंयुष्मभ्यंस्वधा इतितृतीयं मोटकरूपमासनंसर्वतः पूर्वंगतमुत्सृजेत्। एवमेव मातामह्यादीनांपृथगासनदानम् ॥ ३ ॥ ततः सव्यादिकृत्वा गंधादिकंधृत्वा कुशत्रययवजला-

न्यादाय ॥ ॐ अद्यास्मत्पित्रादित्रयमात्रादित्रय-
मातामहादित्रयश्राद्धसंबंधिविश्वेभ्योदेवेभ्यः एता-
निगंधपुष्प[illegible]पदीपतांबूलयज्ञोपवीतवासांसिवो नम
इत्युच्चार्य गंधादीन्युत्सृजेत् ॥ ततः कृतांजलिः
[illegible]विश्वेषांदेवानामर्चनंसंपूर्णमितिब्रूयात् अस्त्व-
र्चनंसंपूर्णमितिद्विजाब्रूयुः ॥ ततोऽपसव्यादिना
पित्राद्यासनेषुगंधादिधृत्वा । द्विगुणभुग्नकुशत्रयति-
लजलान्यादाय ॐ अमुकगोत्राऽस्मत्पितृपिताम-
हप्रपितामहा अमुकामुकशर्माणो वसुरुद्रादित्य-
रूपाः एतानिगंधपुष्पधूपदीपतांबूलयज्ञोपवीतवा-
सांसि युष्मभ्यंस्वधा इतिपित्रादिभ्य उत्सृज्य
॥ १ ॥ ॐ अमुकगोत्राऽस्मन्मातृपितामहीप्रपिता-
मह्योऽमुकामुकदेव्य एतानि गंधपुष्पधूपदीपतांबू-
लसिंदूरवासांसियुष्मभ्यंस्वधा इतिमात्रादिभ्यः०
॥ २ ॥ ॐ अमुकगोत्राऽस्मन्मातामहप्रमातामह-
वृद्धप्रमातामहा अमुकामुकशर्माणः सपत्नीकाः

वसुरुद्रादित्यरूपाः एतानिगंधपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसियुष्मभ्यंस्वधाइतिमातामहेभ्यः एवमेवमातामहीभ्यश्च गंधादीन्युत्सृजेत् ॥ ३ ॥ ततः कृताञ्जलिर्भूत्वा ॐ पितॄणामर्चनंसंपूर्णमस्त्वितिपठेत् ॐ अस्त्वर्चनंसंपूर्णमितिप्रतिवचनम् ॥ ततो गौरमृत्तिकया जलेनवा प्रत्येकं मंडलं कृत्वा भोजनपात्राणि दद्यात् ॥

अथाग्नौकरणम् ।

व्यंजनक्षारवर्जितं घृताक्तमुष्णमन्नं श्राद्धीयान्नाग्रभागं कांस्यपात्रेकृत्वा ॐ अग्नौकरणंकरिष्ये इतिपृष्ट्वा ॥ कुरुष्व इत्यनुज्ञातोऽपसव्यादिना एव सपात्रके पितृब्राह्मणहस्ते अपात्रके ताम्रपात्रादिस्थजलेवा ॐ अग्नयेकव्यवाहनायस्वाहा ॥ इदमग्नयेकव्यवाहनाय ॥ ॐ सोमाय पितृमतेस्वाहा ॥ इदं सोमाय पितृमते ॥ इत्याहुतिद्वयं जुहुयात् ॥

ततोहुतशेषमन्नंपित्रादिपात्रेषु किंचिद्दत्त्वा पिंडार्थंचावशेषयेत् ॥ ततः सव्यादिना देवपात्रे अपसव्य[illegible]येषु उष्णमन्नं सघृतमनेक[illegible]जनयुतं सुशीतलजलसहितं यथावत् परिविष्य मधुमयंकृत्वा ॐ मधुव्वाताऽऋतायते इतित्र्यृचेन ॐ मधुमधुमध्विर्तिचाभिमंत्रयेत्॥ततः सव्यादिना उत्तानपाणिभ्यां दे[illegible]पात्रमालभ्य ॐ पृथिवीतेपात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहा ॥ ॐ इदंविष्णुर्विचक्रमे त्रेधानिदधेपदम्॥ समूढमस्यपाꣳसुरेस्वाहा ॥ इतिपठित्वा ॥ ॐ अपहताऽअसुरारक्षाꣳसिव्वेदिषदः इति यवान् पात्रपरितोविकीर्य ॥ दक्षिणकरेणकुशत्रयादीन्यादाय ॥ ॐ अद्यास्मत्पित्रादित्रयमात्रादित्रयमातामहादित्रयमातामह्यादित्रयश्राद्धसंबंधिनो विश्वेदेवाः इदमन्नं सोपस्करं हव्यम् अमृतरूपं वः स्वा-

ह्ना नमः ॥ इत्युदकंदेवतीर्थेनदक्षिणभागे भूमौ क्षिपेत् ॥ ततोऽपसव्यादिनापित्रादिपात्रंन्युब्जपाणिभ्यां व्यस्ताभ्यां स्पृष्ट्वा॥ॐ पृथिवीते पात्रं० ॐ इदम्विष्णुर्विचक्रमे इतिजप्त्वा ॥ ॐ अपहताऽअसुरारक्षांᳬसिव्वेदिषद॑इतितिलान् अन्नपात्रपरितो विकीर्य्य वामकरेणपात्रंस्पृशन् दक्षिणकरेण द्विगुणभुग्नकुशत्रयादीन्यादाय ॥ ॐ अद्यामुकगोत्राऽस्मत्पितृपितामहप्रपितामहा अमुकामुकशर्माणो वसुरुद्रादित्यरूपाः इदमन्नं सोपस्करं कव्यम् अमृतरूपं युष्मभ्यं स्वधा ॥ इत्युदकंपितृतीर्थेन वामभागे भूमौ क्षिपेत्॥ ततोमात्रादिपात्रमालभ्यपूर्ववज्जप्त्वा ॐ अमुकगोत्रास्मन्मातृपितामहीप्रपितामह्योमुकामुकदेव्यः इदमन्नं सोपस्करं कव्यम् अमृतरूपं युष्मभ्यं स्वधा इत्युत्सृजेत् ॥ एवं मातामहादिपात्रमपिस्पृष्ट्वा पूर्ववज्जप्त्वा ॐ

अद्यामुकगोत्राऽस्मन्मातामहप्रमातामहवृद्धप्रमा-तामहाअमुकामुकशर्माणः सपत्नीकाः वसुरुद्रादि-त्यरूपाः इदमन्नं सोपस्करं कव्यम् अमृतरूपं युष्म-भ्यं स्वधा इत्युत्सृजेत् ॥ एवमेवमातामह्यादि-भ्योप्यन्नमुत्सृजेत् । ततः ॐ अन्नहीनं क्रियाहीनं विधिहीनं च यद्भवेत् । तत्सर्वमच्छिद्रमस्तु पित्रा-दीनां प्रसादतः ॥ इतिप्रार्थ्य प्रणवव्याहृतित्रयपूर्वां गायत्रीं त्रिः सकृद्वा जपेत् ॥ ततः ॐ मधुव्वाताऽ-ऋतायतेमधुंक्षरन्ति सिंधवः माध्वीर्नः सन्त्वोष-धीः ॥ १ ॥ मधुनक्तमुतोषसोमधुमत्पार्थिवꣳ रजः मधुद्यौरस्तुनः पिता ॥ २ ॥ मधुमान्नोव्व-नस्पतिर्मधुमाँऽअस्तुसूर्य्यः माध्वीर्गावोभवन्तु नः ॥ ३ ॥ इति त्र्यृचम् ॥ ॐ मधुमधुमध्विति चपठेत् ॥ ततः सव्येन-

ॐ कृणुष्वपाजः प्रसितिन्नपृथ्वीं य्याहिराजेवाम-वाँ२इभेन। तृष्वीमनुप्प्रसितिन्द्रूणानोस्तासिविध्य-रक्षसस्तपिष्ठैः॥१॥ तव्वभ्रमासऽआशुयापतन्त्यनु-स्पृशधृषताशोशुचानः। तपूं२ष्यग्नेजुह्वापतंगान सन्दितो विसृज विष्वगुल्काः॥२॥प्रतिस्पशोविसृ-जतूर्णितमोभवापायुर्विशोऽअस्याऽअदब्धः। यो नोदूरेऽअघशंठ्ठसोयोऽअन्त्यग्नेमाकिष्टेव्यथिरादं-धर्षीत्॥३॥उदग्नेतिष्ठप्रत्यातनुष्वन्यमित्राँ २ ओ-षतात्तिग्महेते। योनोऽअरातिठ्ठसमिधानचक्रे नी-चातंधक्ष्यतसन्नशुष्कम्॥४॥ऊर्ध्वोभवप्रतिविद्ध्या ध्यस्मदाविष्कृणुष्वदैव्यान्यग्ने। अवस्थिरातनुहिया तुजूनाञ्जामिमजामिम्प्रमृणीहिशत्रून्। अग्नेष्ट्वातेज-सासादयामि॥५॥ इतिरक्षोघ्नीःपंचऋचःपठित्वा॥

ॐ उदीरतामवर ऽउत्परास ऽउन्मध्यमाः पितरः सोम्यासः । असुंय्य ऽईयुरवृका ऽऋतज्ञास्तेनोऽवन्तु पितरो हवेषु ॥ १॥ अङ्गिरसो नः पितरो नवग्वा ऽअथर्वाणो भृगवः सोम्यासः । तेषां वयꣳ सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम ॥२॥ येनः पूर्वे पितरः सोम्यासोऽनूहिरे सोमपीथं वसिष्ठाः । तेभिर्यमः सꣳ रराणो हवीꣳष्युशन्नुशद्भिः प्रतिकाममत्तु ॥ ३ ॥ त्वꣳ सोम प्रचिकितो मनीषा त्वꣳ रजिष्ठमनुनेषि पन्थाम् । तव प्रणीती पितरो न ऽइन्दो देवेषु रत्नमभजन्त धीराः ॥४॥ त्वया हि नः पितरः सोम पूर्वे कर्म्माणि चक्रुः पवमान धीराः । वन्वन्नवातः परिधीꣳरपोर्णु वीरेभिरश्वैर्मघवा भवानः ॥ ५ ॥

त्वꣳ सोमपितृभिः संविदानोनुद्यावापृथिवीऽ आततन्थ । तस्मैतऽइन्द्रोहविषाविधेमवयꣳस्यामपतयोरयीणाम् ॥६॥ बर्हिषदः पितरऽऊत्यर्वागिमावोहव्याचकृमाजुषध्वम् । तऽआगतावसाशन्तमेनाथानः शंयोररपोदधात ॥ ७ ॥ अहाम्पितॄन्त्सुविदत्राँ२ अवित्सिनपातञ्चविक्रमणञ्चविष्णोः । बर्हिषदोयेस्वधयासुतस्यभजन्त पित्वस्तऽइहागमिष्ठाः ॥८॥ उपहूताः पितरः सोम्यासो बर्हिष्येषुनिधिषु प्रियेषु।तऽआगमन्तुतऽइहश्रुवन्त्वधिब्रुवन्तुतेवन्त्वस्मान् ॥९॥ आयन्तुनः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः । अस्मिन्यज्ञेस्वधयामदन्तोधिब्रुवन्तुतेवन्त्वस्मान् ॥१०॥ अग्निष्वात्ताः पितरऽएहगच्छतसदः सदःसदतसुप्र-

णीतयः । अत्ताहवीꣳषिप्रयंतानिबर्हिष्यांथरयिꣳ सर्व्ववीरंदधातन ॥ ११ ॥ येऽअंग्निष्वात्ता येऽअनंग्निष्वात्तामद्ध्योदिवःस्वधयांमादयंन्ते। तेभ्यःस्वराडसुनीतिमेतांयंथावशन्तन्वङ्कल्पयाति ।१२। अग्निष्वात्तानृतुमतोहवामहे नाराशꣳसेसोमपीथंयऽआशुः तेनोविप्रासःसुहवा भवन्तु वयꣳस्यामपतंयोरयीणाम् ॥ १३ ॥ इतिपितृमंत्रान्पठेत् ॥

ॐ सहस्रंशीर्षापुरुंषः सहस्राक्षः सहस्रपात् । सभूमिꣳ सर्वतस्पृत्वात्यंतिष्ठद्दशाङ्गुलम् ॥ १ ॥ पुरुंषऽएवेदꣳ सर्व्वंयद्भूतंयच्चभाव्यम्। उतामृतत्वस्येशांनोयदन्नेनातिरोहंति ॥ २ ॥ एतावांनस्यमहिमातोज्यायाँश्चपुरुंषः । पादोस्यविश्वांभूतानिं त्रिपादस्यामृतंन्दिवि ॥ ३ ॥ त्रिपादूर्द्ध्वऽउदैत्पुरुंषः पादो-

स्येहाभवत्पुनः । ततो विष्वङ्व्यक्रामत्साशनानशने ऽअभि ॥४॥ ततो विराडजायत विराजो ऽअधिपूरुषः । सजातो ऽअत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥५॥ तस्माद्यज्ञात्सर्वहुतः सम्भृतम्पृषदाज्यम् । पशूँस्ताँश्चक्रे वायव्यानारण्यान्ग्राम्याश्च ये ॥६॥ तस्माद्यज्ञात्सर्वहुत ऽऋचः सामानि जज्ञिरे । छन्दाᳩंसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥७॥ तस्मादश्वा ऽअजायन्त ये के चोभयादतः । गावो ह जज्ञिरे तस्मात्तस्माज्जाता ऽअजावयः ॥८॥ तं यज्ञम्बर्हिषि प्रौक्षन्पुरुषञ्जातमग्रतः । तेन देवा ऽअयजन्त साध्या ऽऋषयश्च ये ॥ ९ ॥ यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् । मुखङ्किमस्यासीत्किम्बाहू किमूरू पादा ऽउच्यते ॥ १० ॥ ब्राह्मणोऽस्य

मुखंमासीद्बाहूराजन्यः कृतः । ऊरूतदस्ययद्वैश्यः पद्भ्याᳪंशूद्रोऽअजायत ॥ ११ ॥ चन्द्रमामनसो जातश्चक्षोः सूर्य्योऽअजायत । श्रोत्राद्वायुश्च प्राणश्चमुखादग्निरजायत ॥ १२ ॥ नाभ्याऽआसीदन्तरिक्षᳪ शीर्ष्णोद्यौः समवर्त्तत । पद्भ्याम्भूमिर्दिशः श्रोत्रात्तथालोकाँ २ अकल्पयन् ॥ १३ ॥ यत्पुरुषेणहविषादेवायज्ञमतन्वत । वसन्तोस्यासीदाज्यंग्रीष्म ऽइध्मःशरद्धविः ॥ १४ ॥ सप्तास्यासन्परिधयस्त्रिःसप्तसमिधः कृताः । देवायद्यज्ञन्तन्वानाऽअबध्नन्पुरुषम्पशुम् ॥ १५ ॥ यज्ञेनयज्ञमयजन्तदेवास्तानिधर्म्माणिप्रथमान्यासन् । तेह नाकम्महिमानः सचन्तयत्रपूर्वेसाध्याः सन्तिदेवाः ॥ १६ ॥ इतिपुरुषसूक्तम् ॥

ॐ आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम्। सङ्क्रन्दनोऽनिमिष एकवीरः शतꣳ सेना अजयत्साकमिन्द्रः॥ १ ॥ सङ्क्रन्दनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना। तदिन्द्रेण जयत तत्सहध्वं युधो नर इषुहस्तेन वृष्णा॥ २॥ स इषुहस्तैः स निषङ्गिभिर्वशी सꣳस्रष्टा स युध इन्द्रो गणेन। सꣳसृष्टजित्सोमपा बाहुशर्द्ध्युग्रधन्वा प्रतिहिताभिरस्ता॥ ३ बृहस्पते परिदीया रथेन रक्षोहामित्राँ२ऽअपबाधमानः। प्रभञ्जन्त्सेनाः प्रमृणो युधा जयन्नस्माकमेद्ध्यविता रथानाम् ॥ ४ बलविज्ञाय स्थविरः प्रवीरः सहस्वान्वाजी सहमान उग्रः। अभिवीरो अभिसत्वा सहोजा जैत्रमिन्द्ररथमातिष्ठ गोवित्॥ ५॥ गोत्रभिदं गोविदं वज्रबाहु-

अयन्तमज्मप्रमृणन्तमोजसा। इमᳬ सजाताऽअनुवीरयद्ध्वमिन्द्रᳬ सखायोऽअनुसᳬ रभद्ध्वम् ६॥ अभिगोत्राणि सहसागाहमानो दयोवीरः शतमन्न्युरिन्द्रः। दुश्च्यवनः पृतनाषाडयुद्ध्योस्माकᳬ सेनाऽअवतुप्रयुत्सु॥ ७॥ इन्द्रऽआसान्नेताबृहस्पतिर्द्दक्षिणायज्ञः पुरऽ एतु सोमः॥ देवसेनानामभिभञ्जतीनाञ्जयन्तीनाम्मरुतो यन्त्वग्ग्रम्॥ ८॥ इन्द्रस्य वृष्णोव्वरुणस्यराज्ञऽआदित्यानाम्मरुताᳬ शर्द्धऽउग्ग्रम्। महामनसाम्भुवनच्च्यवानाङ्घोषो देवानाञ्जयतामुदस्त्थात्॥ ९॥ उद्धर्षय मघवन्नायुधान्न्युत्सत्वनाम्मामकानाम्मनाᳬसि। उद्वृत्रहन्न्वाजिनांव्वाजिनान्न्युद्रथानाञ्जयतांय्यन्तु घोषाः॥ १०॥

अस्म्माकमिन्द्रः संभृतेषुद्ध्वजेष्वस्माकंया ऽइषं-
वस्ताजंयन्तु । अस्म्माकंव्वीरा ऽउत्तरे भवन्त्व-
स्म्माँ२ऽउंदेवा ऽअवताहवेषु ॥ ११ ॥ अमीषां-
च्चित्तम्प्रंतिलोभयंन्तीगृहाणाङ्गान्न्यप्प्वेपरेंहि ॥अ-
भिप्प्रेहि निर्द्दहहृत्सुशोकैरन्धेनामित्रास्तमसास-
चन्ताम् ॥ १२ ॥ अवसृष्टापरांपतशरंव्व्येब्रह्मंस-
ठंशिते । गच्छामित्रान्प्रपद्यस्व मामीषाङ्कञ्चनो
च्छिषः ॥१३ ॥ प्रेताजयंतानरऽइन्द्रोवः शर्म्म-
यच्छतु । उग्रावंःसन्तुबाहवोनाधृष्ष्यायथासंथ
॥ १४ ॥ असौयासेनांमरुतः परेषामब्भ्येतिंनऽ
ओजंसास्पर्द्धमाना । ताङ्गूहततमसापंव्रतेन यथा-
मीऽअन्न्योऽअन्न्यन्नजानन् ॥ १५ ॥ यत्रंबाणाः
सम्पतंन्तिकुमारा व्विंशिखाऽइंव ।तन्नइन्द्रोबृहस्प-

तिरादितिःशर्म्मयच्छतुविश्वाहाग्न[redacted]।१६।
मर्म्माणितेवर्म्मणा च्छादयामि सोमस्त्वाराजामृ
तेना वस्ताम् । उरोर्व्वरीयोव्वरुणस्ते कृणोतुजयं
न्तन्त्वानुदेवामद ॥१७॥ इत्यप्रतिरथं पठेत् ॥

ततःॐअमूर्त्तानांचमूर्त्तानांपितॄणांदीप्ततेजसाम्।
नमस्यामिसदातेषां ध्यायिनां दिव्यचक्षुषाम् ॥१॥
इन्द्रादीनां च नेतारोदक्षमारिचयोस्तथा । सप्तर्षी-
णांतथान्येषांतां नमस्यामिकामदः ॥२॥मन्वादी-
नांमुनीन्द्राणांसूर्याचंद्रमसोस्तथा॥ तान्नमस्याम्यहं
सर्वान् पितरश्चार्णवेषु च ॥३॥ नक्षत्राणां ग्रहाणां
चवाय्वग्न्योर्नभसस्तथा । द्यावापृथिव्योश्चतथा
नमस्यामि कृताञ्जलिः ॥४॥ देवर्षीणां ग्रहाणां च
सर्वलोकनमस्कृतान् । अभयस्य सदादातॄन्
नमस्येहंकृतांजलिः ॥ ५ ॥ प्रजापतेः कश्यपस्य
सोमाय वरुणाय च । योगेश्वरेभ्यश्च सदानमस्येहं

कृतांजलिः ॥ ७ ॥ नमोगणेभ्यः सप्तभ्यस्तस्था लोकेषु सप्तसु । स्वयंभुवेनमस्यामिब्रह्मणेयोगचक्षुषे ॥ ७ ॥ सोमाधारान् पितृगणान् योगमूर्त्तिधरांस्तथा । नमस्यामि तथासोमं पितरं जगतामहम् ॥ ८ ॥ अग्निरूपांस्तथैवान्यान्नमस्यामि पितॄनहम् । अग्नीषोममयं विश्वं यत एतदशेषतः ॥ ९ ॥ येतुतेजसियेचैतेसोमसूर्याग्निमूर्त्तयः । जगत्स्वरूपिणश्चैव तथाब्रह्मस्वरूपिणः ॥ १० ॥ तेभ्योऽखिलेभ्यो योगिभ्यः पितृभ्यो यतमानसः । नमोनमोनमस्तेमेप्रसीदन्तुस्वधाभुजः ॥ ११ ॥ इतिरुचिस्तोत्रं पठेत् ॥ ततःउच्छिष्टसन्निधौ अपसव्यादिना चतुरस्रं दक्षिणप्लवंहस्तमात्रं चतुरङ्गुलोच्चंरमणीयंपित्रादित्रयपिंडपातनार्थं स्थानं निर्माय तत्प्राङ्मात्रादित्रयमातामहादित्रयमातामह्यादित्रयपिंडपातनार्थं तादृशमेवस्थानद्वयं कुर्यात् ॥ ततः सर्वत्र अनन्तगर्भ-

साग्रपत्रद्वयरूपदर्भपिंजुलीमूलेन ॐ अपहता इति मंत्रेण दक्षिणाग्रांरेखांसकृत्सकृदुल्लिख्यदर्भपिंजुलीमुत्तरस्यांदिशि निक्षिप्य ॥ ॐ येरूपाणिप्रतिमुञ्चमाना ऽअसुराः सन्तःस्वधयाचरन्ति ॥ परापुरोनिपुरायेभरंत्यग्निष्टाँल्लोकात्प्रणुदात्यस्मात् ॥ इति मंत्रेण उल्मुकं प्रत्येकंरेखोपरिभ्रामयित्वादक्षिणतो निदध्यात् ॥ ततः उपमूलसकृदाच्छिन्नंदक्षिणाग्रकुशत्रयंरेखोपरिस्तीर्त्वाद्वादशपात्रेषु जलतिलगंधपुष्पाणि क्षिप्त्वा एकंपात्रं गृहीत्वा ॐ अमुकगोत्र अस्मत्पितरमुकशर्मन् अत्रावनेनिक्ष्वतेस्वधाइति कुशमूले पितृतीर्थेन अवनेजनंदद्यात् ॥ एवं पितामहाय कुशमध्ये प्रपितामहाय कुशाग्रे अवनेजनंसावशेषं दद्यात्। एवमेव मात्रादिभ्योमातामहेभ्योमातामहीभ्यश्चदद्यात् ॥ ततः सर्वस्मात्पायसादि श्राद्धशेषान्नात्किंचित्किंचिदन्नमुद्धृत्य रजतादिपात्रे कृत्वाहुतशेषान्नं मध्वाज्यतिलव्यंज-

नादिना संयोज्य ॥ अथवा चरुणा सक्तुना वा पिण्याकगुड-तंडुल-यवगोधूमपिष्टकानामन्यतमेन वा नवपिंडान् बिल्वोपमान्निर्माय मधुघृताभ्यामव घार्य पित्रादिभ्योदद्यात् ॥ तत्रप्रथमंपिंड मोटकादिनादाय ॐ अमुकगोत्र अस्मत्पितरमुकशर्मन् वसुरूप एतत्ते पिंडं स्वधा इति प्रथमाऽवनेजनस्थाने सव्योपगृहीतदक्षिणहस्तेनापितृतीर्थेन दद्यात् ॥ एवंपितामहायप्रपितामहायचदद्यात् ॥ ततः ॐ अमुकगोत्रेऽस्मन्मातरमुकदेवि एतत्ते पिंडंस्वधा ॥ इतिद्वितीयवेदिकायां प्रथमाऽवनेजनस्थाने मात्रे पिंडं दत्त्वा पितामह्यैप्रपितामह्यैच दद्यात् ॥ पुनः ॐ अमुकगोत्र अस्मन्मातामहामुकशर्मन् वसुरूप एतत्तेपिंडं स्वधा इतितृतीयवेदिकायांमातामहाय पिंडंदत्त्वा प्रमातामहायवृद्धप्रमातामहायचदद्यात् एवमेवमातामहीभ्योपि पिंडं दद्यात् ॥ ततः सर्वत्रपिंडाधारकुशमूले ॐ लेपभागभुजः पितरस्तृ-

यन्तु इतिपठित्वा हस्तंप्रोञ्छ्यजलेनहस्तौप्रक्षालयेत् ॥ ततः सव्येनत्रिराचम्याविष्णुंस्मृत्वा अपसव्यादिना ॐ अत्रापितरोमादयध्वंयथाभागमावृषायध्वम्॥ इतिपित्रा द्देशंपठित्वा मावर्त्तनोदङ्मुखोभूत्वा तिमनाः मनाकूश्वासं नियम्य तेनैव यथापरावृत्य ॐ अमीमदंतापितरोयथाभागमावृषायिषत इतिजपेत् ॥ एवंमात्राद्युद्देशेन ॐ अत्र मातरोमादयध्वंयथाभागमावृषायध्वम् इति पठित्वाश्वासंनियम्यपूर्ववत् ॥ ॐ अमीमदंतमातरो यथाभागमावृषायिषत॥ इति जपित्वा एवमेव ॐ अत्रमातामहादयो मादयध्वं यथाभागमावृषायध्वमिति ॐअमीमदंतमातामहाः यथाभागमावृषायिषत इति जपेत् । एवमेवमातामह्यादिपक्षेकुर्यात् ॥ ततः पूर्वदत्तावनेजनपात्रस्थजलेन ॐ अमुकगोत्र अस्मत्पितरमुकशर्मन् वसुरूप अत्रप्रत्यवनेनिक्ष्व तेस्वधा इतिप्रथमपिंडोपरिप्रत्यवनेजनं दत्त्वा एव-

मेव पितामह्यायप्रपितामह्यायच दद्यात् ॥ ततः ॐ अमुकगोत्रेऽस्मन्मातरमुकदेवि अत्रप्रत्यवने-निक्ष्वतेस्वधाइतिमातृपिंडोपरि प्रत्यवनेजनंदत्त्वा पितामह्यादिपंचपिंडोपरिमातामह्यादि पिंडोपरि च क्रमेण प्रत्येकं दद्यात् ॥ ततो नीवीं विस्रंस्य सव्येनाचम्य अपसव्यं कृत्वा ॥ ॐ नमो वः पितरो रसायनमोवः पितरः शोषायनमोवः पि-तरोजीवाय नमोवः पितरः स्वधायै नमोवः पितरो घोरायनमोवः पितरोमन्यवेनमोवः पितरः पितरो नमोवोगृहान्नः पितरोदत्तसतोवः पितरो देष्म इतिकृतांजलिः पठित्वा ॐ नमोवोमातरो रसाय इत्यादिमंत्रोहेन मात्रादीन्मातामहादींश्च प्रणमेत् ॥ ततः ॐ एतद्वः पितरोवासः ॥ ॐ एतद्वोमातरोवासः ॥ ॐ एतद्वोमातामहादयो वासः ॥ इतिपठित्वा नवसुपिंडेषुसूत्राणिदद्यात् ॥

ॐ अमुकगोत्र अस्मत्पितरमुकशर्मन् वसुरूप एतत्तेवासः स्वधा ॥ इतिसूत्रमुत्सृजेत् ॥ एवमेव पितामहादिपिंडेषु तत्तन्नाम्ना त्सृजेत् ॥ ततः पितॄनुद्दिश्य तदीयपिंडेषु तूष्णीं गंधपुष्पतुलसीधूपदीपतांबूलपूगीफलदक्षिणादीनिदद्यात्॥ पिंडशेषान्नं पिंडसमीपे विकिरेत् ॥ ततः सव्याऽपसव्याभ्यां देवपितृभोजनपात्रेषु ॐ शिवाआपः संतु इतिजलम् ॐ सौमनस्यमस्तु इतिपुष्पाणि ॐ अक्षतंचारिष्टंचास्तु इतियवांश्चदद्यात् न तंडुलान् ॐ अमुकगोत्रस्यास्मत्पितुरमुकशर्मणो वसुरूपस्य दत्तैतदन्नपानादिकमक्षय्यमस्तु इति सातिलमक्षय्योदकं पित्रेदत्त्वा एवंपितामहाय प्रपितामहायचदद्यात् ॥ ततः ॐ अमुकगोत्रायास्मन्मातुरमुकदेव्या दत्तैतदन्नपानादिकमक्षय्यमस्तु इतिमात्रेदत्त्वा पितामह्यादीनांमातामहादीनांमातामह्यादीनांचप्रत्येकमक्षय्योदकं दद्यात् ॥ ततः

सव्यंकृत्वाप्राङ्मुखस्तन्मनाः कृतांजलिर्दक्षिणां दिशंपश्यन् ॐ अघोराःपितरः संतु ॐ अघोरामातरः संतु ॐ अघोरामातामहादयश्च संतु इतिवदेत्॥ततः ॐगोत्रंनोवर्द्धताम् दातारोनोभिवर्द्धताम् वेदाः संततिरेवच। श्रद्धाचनोमाव्यगमत् बहुदेयंचनोऽस्तु। अन्नंचनोबहुभवेत् अतिथींश्च लभेमहि॥ याचितारश्चनःसन्तु माचयाचिष्मकंचन॥ एताःसत्या आशिषः सन्तु इति प्रार्थयेत्॥ ततोऽपसव्यं कृत्वा पिंडोपरिसपवित्रान्कुशानास्तीर्य स्वधांवाचयिष्ये इतिब्रूयात्। ॐ पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो मातृभ्यः पितामहीभ्यः प्रपितामहीभ्यो मातामहेभ्यः प्रमातामहेभ्यः वृद्धप्रमातामहेभ्यः मातामह्यादिभ्यश्चस्वधोच्यतामितिपठेत्॥ ततः ॐ ऊर्ज्जं वहन्तीरमृतं घृतं पयः कीलालंपरिस्रुतम्॥

स्वधास्थ तर्पयत मे पितॄन्॥इतिसपवित्रकुशोपरि दक्षिणाग्रां जलधारां दद्यात् ॥ मात्रादिपिंडेषु स्वधास्थतर्पयतमे मातॄः ॥ स्वधास्थतर्पयतमे मातामहादीन् इति मंत्रोहेनदद्यात् ॥

ततोदक्षिणादानम् ।

तत्र उदङ्मुखः सव्येन हिरण्यदक्षिणा-मादाय ॐ अद्यास्मत्पित्रादित्रयमात्रादित्रय-मातामहादित्रय-मातामह्यादित्रय-श्राद्धसम्बन्धिनां विश्वेषां देवानां कृतैतत्तीर्थप्राप्तिनिमित्तकपार्वण-श्राद्धप्रतिष्ठार्थमिदं हिरण्यमग्निदैवत्यममुकगोत्रा-यामुकशर्मणे ब्राह्मणाय दक्षिणात्वेनदातुमहमुत्सृ-जे इति देवेभ्यो दद्यात् ॥ ततोऽपसव्यादिना-रजतद्रव्यंगृहीत्वा ॥ ॐ अद्यामुकगोत्राणामस्म-त्पितृपितामहप्रपितामहानाम् अमुकामुकशर्मणां वसुरुद्रादित्यरूपाणां कृतैतत्तीर्थप्राप्तिनिमित्त-कपार्वणश्राद्धप्रतिष्ठार्थमिदं रजतं चंद्रदैवत्यम-

मुकगोत्रायामुकशर्मणे ब्राह्मणाय दक्षिणात्वेनदातु-महमुत्सृजे ॥ इति पित्रादिभ्यो रजतदक्षिणां दत्त्वा ॥ ॐ असुकगोत्राणामस्मन्मातृपितामही-प्रपितामहीनां गंगायमुनासरस्वतीरूपिणीनां कृतैतत्तीर्थप्राप्तिनिमित्तकपार्वणश्राद्धप्रतिष्ठार्थमिदं रजतंचंद्रदैवत्यममुकगोत्रायामुकशर्मणे ब्राह्मणा-यदक्षिणात्वेनदातुमहमत्सृजे इतिमातादिभ्यः ॥ ॐ अमुकगोत्राणामस्मन्मातामह-प्रमातामह-वृद्धप्रमातामहानां सपत्नीकानां वसुरुद्रादित्यरू-पाणां कृतैतत्तीर्थप्राप्तिनिमित्तकपार्वणश्राद्धप्रति-ष्ठार्थम् इदंरजतं चंद्रदैवत्यममुकगोत्रायामुकशर्मणे ब्राह्मणायदक्षिणात्वेनदातुमहमुत्सृजे ॥ इतिमाता-महादिभ्यश्चदक्षिणां दद्यात् । एवमेवमातामहीनां दक्षिणादानम् ॥ दवे रजतानिषेधः॥

ततःपिंडानुत्थाप्यस्थाल्यानिधायअवघ्राणंकृत्वा सकृदाच्छिन्नकुशानुल्मुकंचवह्नौक्षिपेत् ॥ ततः ॐ

देवताभ्यःपितृभ्यश्च इति त्रिर्जपित्वादीपान्निर्वाप्य सव्येनहस्तौपादौप्रक्षाल्य आचम्य ॐ प्रमादात्कुर्वतांकर्म प्रच्यवेताध्वरेषुयत् । स्मरणादेव तद्विष्णोः संपूर्णस्यादितिश्रुतिः ॥ इतिपठित्वा कर्मपूर्त्तिकामोविष्णुंस्मरेत् ॥ ततः पिंडान् तीर्थजलेदक्षिणाभिमुखः क्षिप्त्वा उच्छिष्टमार्जनादिकं कुर्यात् ॥ ततोवैश्वदेवबलिकर्मणी कृत्वा यथाशक्तितीर्थब्राह्मणान्भोजयित्वा तेभ्यो दक्षिणां दत्त्वा ॐ अमुकतीर्थप्राप्तिनिमित्तं पार्वणश्राद्धं परिपूर्णमस्तुइति तान् प्रार्थ्य। अस्तुपरिपूर्णमित्यनुज्ञातः स्वयंभोजनं कुर्यात् ॥ एवमेव पितृव्यादीनामेकोद्दिष्टविधिनाकुर्यात् ॥ पार्वणाद्यसंभवे सर्वेषां पिंडदानमात्रमपि तीर्थश्राद्धं कर्त्तव्यम् ॥

इति श्राद्धप्रकाशे तीर्थनिमित्तकद्वादशदैवत्यपार्वणश्राद्धपद्धतिः समाप्ता ॥

